# 53. आश्रयिणामदृष्टार्थताधिकरणम्

## IV -1-7

**चतुर्थे प्रथमपादे विचारितम्— 'आश्रयिष्वविशेषेण भावोऽर्थः प्रतीयते'** (IV-1-7-18) **ज्योतिष्टोमे अग्नीषोमीयपश्वङ्गत्वेन पुरोडाशयागः श्रुतः 'अग्नीषोमीयस्य वपया प्रचार्य अग्नीषोमीयं पुरोडाशं निर्वपतीति । सोऽयमग्नीषोमीयस्य पशोः तदीयदेवतास्मरणसंस्का-रार्थत्वेन सन्निपत्योपकारकः इति दशमस्थास्यान्तमर्थं सिद्धवत् कृत्वा अन्यदिह चिन्त्यते । किमयं पुरोडाशयागः पशुदेवतायाः स्मरणसंस्कारं कुर्वन् किं तदर्थ एव उत अपूर्वार्थोऽपीति । तत्र एकस्य कर्मणः युक्तमेकमेव प्रयोजनम् । 'दृष्टे सति न अदृष्टं कल्प्यम् । न अपूर्वमस्ती'ति पूर्वपक्षः ।**

**यागाङ्गमन्त्रमुखेन देवतास्मरणे सिद्धे देवतोद्देशेन त्यागांशस्य न अदृष्टार्थत्वे किञ्चित् प्रयोजनमिति त्यागांशेनापूर्वार्थोऽपीति सिद्धान्तः ॥**

---

**53. पूर्वपक्षः—**

एकस्य कर्मणो युक्तमेकमेव प्रयोजनम् ।
दृष्टे सति नादृष्टं कल्प्यं नापूर्वमस्त्वतः ॥

**सिद्धान्तः—**

देवतास्मरणं मन्त्रात् प्रक्षेपात् द्रव्यसंस्कृतिः ।
त्यागस्य तु नादृष्टादृते किञ्चित् प्रयोजनम् ॥ (शा.दी.)

## 54. संयोगपृथक्त्वन्यायेन दध्यादेर्नित्यनैमित्तिकोभयार्थताधिकरणम्

### IV-3-3

चतुर्थे तृतीयपादे चिन्तितम्— 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' (IV-3-3-5) अग्निहोत्रे 'दध्नेन्द्रियकामस्य जुहुयात्, दध्ना जुहोति' इति वाक्यं श्रूयते। तत्र किं फलार्थमेव दधि उत क्रत्वर्थमपीति संशये फलवाक्यस्य दधीन्द्रियसम्बन्धसमर्पकतया एकवाक्यत्वेन दध्ना जुहोतीत्यस्य क्रतौ दधि विधायकत्वाभावात् फलार्थमेवेति पूर्वः पक्षः।

सिद्धान्तस्तु— सिद्धरूपस्य दध्नः स्वतः अननुष्ठेयत्वेन फलार्थत्वेन विधानायोगात् तदुपपत्तये साध्यतानुरागार्थं स्वतस्साध्यक्रियारूपाश्रयापेक्षया प्रकरणेनैव होमरूपाश्रय-सम्बन्धलाभात्। तदर्थं दध्ना जुहोतीत्यस्य तदेकवाक्यतेति तेन पृथगेव क्रत्वर्थतया दधिविधानादुभयार्थं दधीति।

---

**54. पूर्वपक्षः—**

दध्नेन्द्रियकामस्य नित्येऽन्यदुत तद्दधि।
अन्यत् स्यात् पूर्ववत्

**सिद्धान्तः—**

नैवं संयोगस्य पृथक्त्वतः। (जै.न्या.मा.)

# ५५. यावज्जीविकाग्निहोत्राधिकरणम्

## II-4-1

**द्वितीये चतुर्थपादे चिन्तितम्— 'यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात्' (II-4-1-5) 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेते'ति किं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति विहिते काम्यप्रयोगे गुणविधिः अधिकारान्तरविधिरिति (कालान्तरविधिरिति) संशये प्रकरणानुग्रहात् प्रकृत एव काम्यप्रयोगे यावज्जीवन(अभ्यास)काललक्षणो गुणो विधीयते इति पूर्वः पक्षः ।**

**गुणविधौ जीवनशब्देन तत्सहचरितकालो लक्षणीयः । जुहोति शब्देन च अभ्यासः अधिकारान्तरचोदनायां श्रुत्यर्थः । जीवनस्य अधिकारिविशेषणत्वात् यागस्यैव विधेयत्वात् न क्वापि लक्षणेत्यधिकारान्तरचोदना । ततश्च वाक्यद्वयवशात् काम्यो नित्यश्च दर्शपूर्ण-मासप्रयोगः इति सिद्धान्तः ॥**

---

**55. पूर्वपक्षः—**

यावज्जीवं जुहोतीति धर्म कर्मणि पुंसि वा ।
कालत्वात् कर्मधर्मोऽतः काम्य एकः प्रयुज्यताम् ॥

**सिद्धान्तः—**

न कालो जीवनं तेन निमित्तप्रविभागतः ।
काम्यप्रयोगो भिन्नः स्यात् यावज्जीवप्रयोगतः ॥ (जै.न्या.मा.)

## 56. कृष्णले अवघातबाधाधिकबाधाधिकरणम्

X-1-1

दशमाध्याये विचारितम्— 'प्राजापत्यं शतकृष्णलचरुं निर्वपेदायुष्कामः' इत्यत्र कृष्णलचरौ अवघातः कर्तव्यो न वेति संशये अवघातप्रापकचोदकवशादवघातः कर्तव्यः इति पूर्वः पक्षः ।

अवघातस्य तुषविमोचनरूपदृष्टद्वारस्य च कृष्णलेषु असाध्यत्वात् द्वारलोपेन चोदक-तदतिरिक्तदर्शपूर्णमासिकाङ्गविषयः । स तदंशे लुप्यते इति न कर्तव्यः इति सिद्धान्तः ॥

---

**56. पूर्वपक्षः—**

अवघातः कृष्णलानामस्ति नो वास्ति पाकवत् ।

**सिद्धान्तः—**

प्रत्यक्षोक्त्या चरेत् पाकमवघाते तु नास्ति सा । (जै.न्या.मा.)

# 57. भक्षमन्त्राणां यथालिङ्गं विनियोगाधिकरणम्

## III-2-9

शेषलक्षणे द्वितीये पादे चिन्तितम्— 'लिङ्गसमाख्याभ्यां भक्षार्थतानुवाकस्य' (III -2-9-24) अस्ति भक्षानुवाकः 'भक्षे हि माविश' इत्यादिः तस्य कश्चिदंशः सोमस्य भक्षणं प्रतिपादयति । ग्रहणावेक्षणनिगरणसम्यग्जरणप्रतिपादकाः अन्ये अंशाः । तत्र संशयः किं कृत्स्नः अयमनुवाकः 'भक्षणे विनियोक्तव्यः उत भक्षणप्रकाशकांशः भक्षणे, ग्रहणादि-प्रकाशकोंऽशः ग्रहणादिषु इति विभज्य विनियोक्तव्यः इति । तत्र भक्षानुवाकसमाख्या-वशात् विहितभक्षणप्रकाशकांशैकवाक्यत्वाच्च कृत्स्नोऽपि भक्षणे विनियोक्तव्यः । यद्यपि 'अश्विनोर्बाहुभ्यां सख्यासमम्', इत्यादीनां ग्रहणादिप्रकाशने सामर्थ्यरूपं लिङ्गमस्ति । तच्च वाक्यसमाख्याभ्यां बलीयः । तथापि ग्रहणादीनामचोदितानां क्रत्वर्थत्वात् तत्प्रका-शनमनर्थकमिति ग्रहणादिप्रकाशकभागानामपि (दृष्टादिपादानामिव लक्षणया) स्वस्वार्थ-विशिष्टे भक्षणे लक्षणाकल्पनात् कृत्स्नोऽपि तत्रैव विनियोक्तव्यः इति पूर्वः पक्षः ।

सिद्धान्तस्तु— साक्षादचोदितमपि ग्रहणादिकं भक्षार्थमर्थप्राप्तमनुष्ठेयम् । जरणं यद्यपि न भक्षणार्थं न वा साक्षात् कृतिसाध्यं तथापि सम्यग्जरणान्तमेव भक्षणं दृष्टम् । सोमप्रतिपत्त्यर्थतया तदपि जरणकार्यासनविशेषद्वारा अनुष्ठेयम् । तस्मात् लिङ्गबलाद् विभज्यैव विनियोगः इति ॥

---

**57. पूर्वपक्षः—**

भक्षे हीत्यनुवाकोऽयं सर्वो भक्षणगाम्युत ।
ग्रहणादौ यथायोगं विभज्य व्यवतिष्ठते ।
अविधेर्ग्रहणादीनां भक्षणे निखिलोऽस्तु सः ॥

**सिद्धान्तः—**

अर्थाक्षिप्तेषु तेष्वेव यथालिङ्गं विभज्यते ॥ (जै.न्या.मा.)

## 58. मन्द्रादिभूतिरित्यादेरेकमन्त्रताधिकरणम् III-2-10

**'गुणाभिधानान्मन्द्रादिरेकमन्त्रः स्यात्तयोरेकार्थसंयोगात्' (III -2-10-26) 'भक्षानुवाक एव वाग्जुषाणा सोमस्य तृप्यतु' इति तृप्तिप्रकाशको भागः तृप्तौ विनियोज्यः उत भक्षयाज्यं तदेकवाक्यतया भक्षणे एवेति संशये पूर्ववत् लिङ्गात् विभज्य विनियोगे प्राप्ते सिद्धान्तः। न तावत् तृप्तिः साक्षादनुष्ठेया नापि जरणवत् भक्षणातिरिक्त(विरक्त)किञ्चित्साधनानुष्ठान-द्वारा भक्षणानुनिष्पादितत्वात्। तस्मात् केवलतृप्तिप्रकाशने अनुष्ठेयाभावाददृष्टार्थता अस्य स्यात्। तृप्तिविशिष्टभक्षणप्रकाशने तु उत्साहजननाद् दृष्टार्थता भवति। तस्माद् भक्षण एव विनियोगः।**

**इति न्यायामृते पूर्वमीमांसोक्ता उदाहृताः।**
**वैदिकस्तान् पृथक्कृत्य जयीन्द्रो व्याकरोत् सुधीः** (विजयीन्द्रकः)।

**अल्पधीः सुजनस्तत्र प्रवृत्तौ नाल्पधीर्भवेत्।**
**तदा दैशिकसेवेयं मुदे मे पर्यवस्यति॥**

***॥ इति श्री विजयीन्द्रभिक्षुविरचिता न्यायामृतोदाहृतजैमिनीयन्यायमाला समाप्ता॥***

॥ श्रीकृष्णार्पणमस्तु॥

★ ★ ★

---

**58. पूर्वपक्षः—**

मन्द्रेति वसुमच्चेति द्वयं तर्पणभक्षयोः।
विभक्तव्यमुताशेषं तृप्तिसंयुक्तभक्षणे॥
लिङ्गात् विभागः

**सिद्धान्तः—**

मैवं नो तृप्तिर्भक्षणतोऽन्यतः।
लिङ्गस्यासम्भवे वाक्यशेषात् सर्वोऽस्तु भक्षणे॥ (जै.न्या.मा.)

॥ श्रीकृष्णार्पणमस्तु॥

★ ★ ★

